संस्कृतविद्यासमिति-पत्रिका

தனி ப்ரதி
விலை ரூ. 4
APRIL 2015

# संस्कृतश्रीः

# ஸம்ஸ்க்ருதஸ்ரீ:

ஸம்ஸ்க்ருதஸ்ரீ
கல்விக் கழகம்
மாத இதழ்
212/13-1 செயிண்ட்
மேரிஸ் ரோடு
மந்தைவெளி
சென்னை-28

**Samskritasri**

A Monthly Journal of
Samskrit Education Society

पुनः समाः षोडशायुरस्तु ते विश्वभूतये ।
सर्वतन्त्रस्वतन्त्रस्त्वं तत्त्वं बोधय विस्तरात् ॥

( 24951402

ௐ

# THE SAMSKRIT EDUCATION SOCIETY (Regd) CHENNAI

Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.

President : Vaidya Sri S.V. Radhakrishna Sastri

Secretary & Treasurer : Sri G. SITHARAMAN, F.C.A.

Editor and Publisher Samskritasri : S. SRINIVASA SARMA
34, Senthamil Nagar,
Near : Indra Nagar & New Railway Station
Big Kancheepuram - 631 502
Cell : 90941 53190

---

பாடங்கள் நடத்துபவர்கள் :

| | | | |
|---|---|---|---|
| 1. | ஸ்ரீமதி சாந்தா ஸ்ரீநிவாஸன், | ஆழ்வார்ப்பேட்டை | 24353597 |
| 2. | ஸ்ரீமதி மாலதீ பாலசுப்ரமண்யம், | மேடவாக்கம் | 9884158110 |
| 3. | ஸ்ரீமதி சாந்தி அசோக் | மந்தைவெளி | 249514[illegible] |
| 4. | ஸ்ரீமதி கௌரீ கருணாகரன், | மைலாப்பூர் | 24320544 |
| 5. | ஸ்ரீமதி ரமாசுந்தரராஜன், | சென்னை-95 | 65687[illegible] |
| 6. | ஸ்ரீமதீ பார்வதீ ராமசந்திரன் | அண்ணா நகர் | 26215[illegible] |
| 7. | ஸ்ரீ R. முத்து கிருஷ்ணன் | கொரட்டூர் | 26872[illegible] |
| 8. | ஸ்ரீ S. ரங்கநாத சர்மா, | சேலையூர் | 2229172[illegible] |
| 9. | ஸ்ரீமதி புவனேச்வரீ | ராஜகீழ்பாக்கம் | 9841212047 |
| 10. | ஸ்ரீ K. ராஜேச்வரீ | மாடம்பாக்கம் | 9962837319 |
| 11. | ஸ்ரீ S. ஹரிஹரன் | நங்கைநல்லூர் | 9841403859 |
| 12. | ஸ்ரீ S. அனந்தன் | மதுராந்தகம் | 9894709418 |
| 13. | ஸ்ரீ P.R. சுப்ரமண்யம் | K.K. நகர் | 23640864 |
| 14. | ஸ்ரீ N. ஜானகீ ராமசாஸ்த்ரீ | I.T.I. கிண்டி | 24953144 |
| 15. | ஸ்ரீ R. ஸ்ரீநிவாஸகோபாலாசார்ய | ஸ்ரீரங்கம் | 2430632 |
| 16. | ஸ்ரீமதீ ராஜம் சுந்தர் | திருநெல்வேலி | 9488326850 |
| 17. | ஸ்ரீ T.V. ஸ்ரீநிவாஸ தாதாசார்ய | காஞ்சீபுரம் | 27269153 |
| 18. | ஸ்ரீ P.D. ஸ்ரீநிவாஸன், | திருநின்றவூர் | 9445703470 |
| 19. | ஸ்ரீ R. ரங்கநாதன் | காஞ்சீபுரம் | 97910 55428 |
| 20. | ஸ்ரீ C.A. ஏகாம்பரம் | கோயம்புத்தூர் | 0422-2233242 |

21. ஸ்ரீமதி டி.வி. ஜயலக்ஷ்மி சர்மா, புன்குன்னம், த்ரிசூர்-680 002, 0487-2382964

22. ஸ்ரீமதி கௌரிவேங்கடராமன், காட்கோபர், மும்பை (E) 09757115154

23. ஸ்ரீ V. கோதண்டராமன், Mrs. கீதா ரேகா, ஆதம்பாக்கம், சென்னை 9444469638

# संस्कृतश्रीः

मालाः : 37 APRIL-2015 पुष्पम् 6

कलि : 5109 मन्मथ -चैत्रमासे 37—6

The Samskrit Education Society Established with the blessings of His Holiness SRI MAHASWAMIGAL of Kanchi Kamakoti Peetam in the year 1957.

**OFFICE:**

Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028.

**PRESENT ACTIVITIES**

1. Assisting study of Sanskrit.
2. Publication of books and monthly journal SAMSKRITASRI.





**SUBSCRIPTION RATES**

| | |
|---|---|
| ANNUAL : | Rs. 40/- |
| LIFE SUBSCRIPTION | Rs. 400/- |
| Page Donation | Rs. 200/- |

Subscription and donations may be sent in the form of crossed D.D./Drawn in favour of the Secretary and Treasurer,

"DD/Cheque should be sent by Speed Post only"

The Samskrit Education Society (Regd.) . Old 212/13-1, St.Mary's Road, Mandaiveli, Chennai - 600 028. Ph: 044-2495 14 02
**www.samskrithasri.gmail.com**

# जगद्गुरुनुतिः

–डा.ष. शङ्करनारायणः

पीयूषाभाऽनुपममधुरा वाग्झरी यत्कटाक्षात्
लोके पुंसां प्रवहति जवात्पदसेवारतानाम् ।
यत्पादाभ्यां कलुषहरणे निर्गता देवराशिः
तं वन्देऽहं यतिपरिबृढं शङ्कराचार्यदेवम् ॥ १

यस्य स्तोत्रे द्रुहिणगृहिणी मुग्धतां याति सद्यः
शेषोऽहीशः क्षितिभरसहो मूर्च्छितोऽगण्यजिह्वः ।
तस्य स्तोत्रं कथमहमहो कर्तुमिच्छामि मूढः
तथ्यं तत्र त्रिभुवनगुरोः पादसेवा हि हेतुः ॥ २

कारुण्याब्धिः कलिशमधिया लब्धमानुष्यरूपः
कालट्याख्ये महति सुपुरे पुण्यपुञ्जात्समेषाम् ।
नाम्ना नैजां खलु शिवदतां स्मारयन् शङ्करोऽव्यात्
आर्याम्बायां शिवगुरुवरात्प्राप्तदेहो महेशः ॥ ३

दण्डश्शूलं धृतवृतिपटो व्याघ्रचर्मोत्तरीयं
रुद्राक्षोऽहिः कलितडमरुः कुण्डिकारूपधारी ।
ज्ञानं चक्षुः दहनसदृशं पापकर्मोपतापि
शैवी मूर्तिर्लसति भुवने शङ्कराचार्यनाम्ना ॥ ४

भूत्वा व्यक्तं श्रुतिगिरितटात् शास्त्रभानूज्ज्वलोऽयं
धर्मेद्दीप्त्या कुमततमसा संवृतार्मोन् पालयन्नः ।
नैजं त्यक्त्वा हिमगिरिपदं शङ्कराचार्यरूपात्
अज्ञानान्धापहृतिचतुरो राजते ज्ञानभानुः ॥ ५

वेदक्षेत्रस्मृतिगणबलाद्बद्धमूलोऽसमानः
प्रज्ञाकाण्डः परसुखफलः शास्त्रशाखाविलासी ।
मायाधर्माक्षमजनगणान् लालयन् शङ्कराख्यो
भाष्यस्तोत्रप्रथितकुसुमो राजते ज्ञानवृक्षः ॥ ६

या वै देवी सकलजगतां मातृभूतेति गीता
सा वै देवी तपति नितरां मायया खेलनार्थम् ।
किन्त्वस्माकं शिवकरगुरुस्तारणे बद्धदीक्षः
तस्मान्नम्यः कतर उभयोरुच्यतां दुःखशान्त्यै ॥ ७

दृग्लेशात्ते सकलशुभदात् सत्यवस्त्वैक्यबोधात्
द्वैतज्ञास्ते कुमतनिपुणाः स्तब्धवाचो बभूवुः ।
लोकः पूतो व्यपगततमाः प्राप्य पादाब्जधूलिं
स त्वं पाहि श्रुतिमयतनो शङ्कराचार्यदेव ॥ ८

द्वैतज्ञानात् कलुषमतिभिः शास्त्रवादप्रकारे
स्वीयं वृत्तं स्मृतमपि च किं मर्दनं रावणस्य ।
छिन्नाः भिन्नाः विगतमतयः प्रापुराशाश्च तूर्णं
स त्वं पाहि श्रुतिमयतनो शङ्कराचार्यदेव ॥ ९

यत्पादाम्बुजरेणुना यतिवराः सायुज्यभाजोऽभवन्
मूढाश्चापि विना श्रमं मतियुताः मोक्षस्य मार्गे रताः ।
या वै शङ्करदेशिकेत्यभिधया मायान्धकारापहः
स त्वं पाहि दयानिधे जनिभयाद्वेदान्तविद्यानिधे ॥ १०

* * * *

# स्वच्छभारतं साध्यं वा

–एस्.हरिहरन्, सं.वि.स. नङ्गनल्लूर् ।

'स्वच्छभारतं साधनीयम्' इति उद्घोषणं भारतदेशस्य प्रधानमन्त्री कृतवानस्ति । 'साध्यं वा?' इति प्रश्नं काकुप्रयोगवत् स्वीकृत्य साध्यमेव इति उत्तरं प्रश्ने एव विवक्षितमिति अत्र विमृश्य प्रश्यामः ।

मालिन्यमधिकृत्य किञ्चित् स्मृत्वा अग्रे विमर्शनं कुर्मः । तत्र तत्र अवकरक्षेपणेन स्थलमालिन्यं, तडागे नद्यां प्रक्षालनेन, मृतशरीरक्षेपणेन, यन्त्रागारेभ्यः विसृष्टदूषितजलमेलनेन च जलमालिन्यं, बृहद्यन्त्रागारेभ्यः, सदा सहस्रशः सञ्चरद्भ्यः वाहनेभ्यः च आगतेन धूमेन वायुमालिन्यं, स्फोटकेभ्यः, ध्वनिवर्धकेभ्यः, वाहनध्वनिभ्यः च शब्दमालिन्यं च भवन्ति ।

मालिन्यवारणाय, स्वच्छतानयनाय च वयं भारतीयाः जानीमः किं कर्तव्यमिति । एते भारतीयाः एव विदेशं गत्वा तत्र स्वच्छता उल्लङ्घिता चेत् दण्डनमधिकमिति विज्ञाय स्वच्छतां पालयितुमुचितं व्यवहरन्ति । एत एव भारतमागत्य स्वच्छतापालनविषये अनुचितमाचरन्ति । अतः अस्माभिः भारतीयैः स्वभावपरिवर्तनमेव कार्यमिति मे मतिः । एवं कथनसमये एतदधोदत्तं सुभाषितं स्मृतिपथे आगतम् ।

'स्वभावो नोपदेशेन शक्यते कर्तुमन्यथा ।
सुतप्तमपि पानीयं पुनर्गच्छति शीतताम् ॥'

एतदनुगुणं स्वभावपरिवर्तनम् उपदेशेन अशक्यमिति अवगत्य मम आशयः एवं वर्तते यत् एकैकः भारतीयः आत्मविचारेण केशेषु मृत्युना गृहीतः इव स्वच्छतामाचरेदिति ।

स्वच्छभारतमिति घोषणं नाम काचिदाश्चर्यशृङ्खला यया बद्धाः भारतीयाः सदैव स्वच्छतामाचरन्तु, तया शृङ्खलया कदापि मुक्ताः न भवन्तु इति अस्माकं प्रार्थना वर्तते ।

॥ शम् ॥

एको वेणुधरो धराधरधरः श्रीवत्सभूषाधरः
योऽप्येकः किल शङ्करो विषधरो गङ्गाधरोमाधवः ।
ये मातर्मणिकर्णिके तव जले मज्जन्ति ते मानवाः
रुद्रा वा हरयो भवन्ति बहवस्तेषां बहुत्वं कथम् ॥

ஏகோ வேணுதரோ தராதரதர: ஶ்ரீவத்ஸபூஷாதர:
யோऽப்யேக: கில சங்கரோ விஷதரோ கங்காதரோமாதவ: ।
யே மாதர்மணிகர்ணிகே தவ ஜலே மஞ்ஜ்ஜந்தி தே மாநவா:
ருத்ரா வா ஹரயோ பவந்தி பஹுவஸ்தேஷாம் பஹுத்வம் கதம் ॥

புல்லாங்குழல், கோவர்தன மலை, ஶ்ரீவத்ஸம் என்ற அலங்காரம் இவற்றை தரிப்பவர் ஒரு கிருஷ்ணர்தானே ! சங்கரர் என்பவரும் விஷம் உண்டவர், கங்கையை தலையில் கொண்டவர், உமையின் பர்த்தாவாகியவரும் ஒருவர்தான். ஆனால் தாயே மணிகர்ணிகே ! உனது பிரவாஹத்தில் பலர் மூழ்கி, பல ருத்ரர்களாகவும், பல விஷ்ணுவாகவும் ஆவதுதான் எப்படியோ ஆச்சர்யம் இது !

–ஶ்ரீ ஶங்கர பகவத் பாதர்- மணிகர்ணிகா ஷட்கம்

# विदितो हस्तावलम्बः ।

–डा.टि. नारायणन् कुट्टि, चेन्नै

अस्माकं प्राचीनाः ऋषयः प्रहस्ताः सन्तः भक्तान् अनुगृह्णन्ति स्म ।

–प्रहस्ताः इत्यस्य कोऽर्थः ?

–प्रसृतो हस्तः प्रहस्तः, अर्थात् विस्तृताङ्गुलौ पाणौ इत्येव व्युत्पत्तिः । वरदाभयहस्तिनोऽस्माकं आचार्या इत्यर्थः।

–अधुना राजनैतिकाः, लौकिकनेतारः, सिनिमाभिनेतारश्च वेदिकां आरुह्य प्रहस्ताः सन्तः चालयन्ति ।

–ते प्रतला हस्तानुद्यम्य इतरजनान् अल्पान् अधमान् इव अभिवादयन्ति ।

–'प्रतल' इत्युक्ते कोऽर्थः ।

–प्रश्लिष्टे तले अत्र, अर्थात् वामदक्षिणौ द्वौ संहतौ उद्यम्य प्रसारितौ ।

–यथाभिन्नराजनैतिकदलानां एकवत्कृते मेलने वेदिकायां प्रतलाः हस्ताहस्तिनः सन्तः ते तिष्ठन्ति ।

–सत्यमेव, ते मिथः हसन्ति, बहिः सौहार्दभावाः किल अन्तः हस्ताहस्ति, भीमजरासन्धयोः हस्ताहस्ति इव ।

–द्वयोः विशेषमित्रयोर्दर्शने हस्तं प्रसार्यते किल । हस्तचालनं परस्परं क्रियते । स्वीक्रियमाणस्य

विशेषपुरुषस्याभ्यागमने दोर्भ्यां तदीयहस्तं प्रगृह्य प्रचाल्यते । स एवाधुना आचारः । अञ्जलिबन्धपूर्वकं 'नमस्ते' इति विरलतया स्वीक्रियते । हस्तचालनं पूर्वाचारो वा न वा?

–हस्तचालनं पूर्वाचार एव । आश्लेषोऽपि प्राचीनाचारः । पुराणेतिहासेषु, काव्यशास्त्रेषु बहूनि सन्त्युदाहरणानि । यथा-अक्रूरे वृन्दावने समागते प्रथमतया 'पपात चरणोपान्ते दण्डवत् रामकृष्णयोः' (भा.१०.३८.३४) तदानीं 'भगवांस्तमभिप्रेत्य रथाङ्कित-पाणिना । परिरेभेऽभ्युपाकृष्य प्रीतः प्रणतवत्सलः ॥ (भा. १०.३८.३६) बलरामः प्रणतं तमुपगुह्य 'गृहीत्वा पाणिना पाणी अनयत् सानुजो गृहम्'' (भा. १०.३८.३७)

–'पण व्यवहारे' इत्यस्मात् पाणिः जातः । करतलम् इत्यर्थ किल ।

–आम्, दृष्टान्तरं भागवतात् - रुक्मिण्याः सन्देशं दूतमुखेन शृण्वन् श्रीकृष्णः - 'वैदर्भ्याः स तु सन्देशं निशाम्य यदुनन्दनः । प्रगृह्य पाणिना पाणिं प्रहसन्निदमब्रवीत्'

–अस्माकं देशे क्रीडारम्ये प्रतियोगितायाः आरम्भे ।

–ते च परस्परं हस्तचालनं कुर्वन्ति इत्यपि प्राचीन-ग्रन्थोदाहरणैः स्पष्टीभवति । यथा–भीमजरासन्धयोर्मध्ये मल्लयुद्धे जाते, तत्पूर्वं - 'करग्रहणपूर्वं तु कृत्वा पादाभिवन्दनम्' (महा.भा.सभा. २३.११)

अनन्तरं तौ 'कराकरि' भूत्वा युद्धमारब्धवन्तौ कथम्?
'करसम्पीडनं कृत्वा गर्जन्तौ वारणाविव' ।

–कं सुखं राति ददाति इति करः ।

–करगृहणेन पाणिग्रहणेन महिला सहधर्मचारिणी स्यात् ।

–सुदाम्नः भगवत्समीपागमने - 'सहसोत्थाय चाभ्येत्य दोर्भ्यां पर्यग्रहीन्मुदा' (भा.१०.८०.१८) (वासुदेवः) इत्यवगम्यते

सौहार्दवशात् कृतं करग्रहणं इदं तदानीन्तनसमुदाचारः ।

–हस्ते रेखाः सन्ति, तासां शिरोरेखया न संबन्धः । हस्तस्य अन्यार्थः–

'हस्तावध्यात्ममित्याहुरध्यात्मविदुषो जनाः ।
अधिभूतश्च कर्माणि शुक्रस्तत्राधिदैवतम् ।।'

(महा.भा. आश्वमेधिकपर्व)

–'हस्तस्य भूषणं दानम्, तथापि हस्तमात्र प्रदत्तस्नेहादिद्रव्य-भक्षणे निषेधो वर्तते ।

यथा–

हस्तदत्तानि च स्नेहोलवणं व्यञ्जनानि च
दातारं नोपतिष्ठन्ते भोक्ता भुङ्क्ते तु किल्बिषम् ।
तस्मादन्तरितं कृत्वा पर्णेनाथ तृणेन वा
प्रदद्यात् न तु हस्तेन नायसेन कदाचन ।।

–हस्तत्वात् मनुष्योऽपि हस्ती, किं तु हस्ती इत्यस्य गजे एव रूढिः किल ।

–कारणं वदामि - 'अग्रहस्तं विधुन्वंस्तु हस्ती हस्तमिवात्मनः' । तर्हि को भेदः ?

–मनुष्यस्य हस्ते हस्तजा अङ्गुल्यः सन्ति, हस्तिनः हस्ते तन्नास्ति ।

–अन्यः अस्ति वा कोऽपि भेदः ?

–न विभावयामि ।

–हस्ते हस्तरेखाः सन्ति । हस्तरेखाशास्त्रस्य प्रथितः प्रचार एव मुख्योपजीवनं बहूनाम्, उदरनिमित्तं यद्यत्करणीयं तस्य करणं हस्तस्थम् । तच्छास्त्रं करगतं चेत् आगामि सर्वं करतलामलकमिव ।। हस्तिनः हस्ते रेखा अस्ति वा? हा ! धिक् !

---

निःस्वार्थसंस्कृतसमर्चकः श्रीमद्भगवद्गीता प्रचारकः, संस्कृते स्वैर-भाषणोन्मेषकश्च श्रीमान् P.S. राममूर्तिमहाशयः अप्रतर्क्यविधया गतसप्ताहे स्वीयं स्वर्गीयं स्थानमधिरूढः इति संस्कृतप्रेमिणां सुदुर्धरं विषादं जनयति । विशिष्य संस्कृतश्रीवाचकास्तमिमं स्वं स्वं बान्धवमिव मन्यन्ते स्म यतस्तेषामधिविद्यगोष्ठ्यां निर्देशक आसीत् । 'अजो नित्यः शाश्वतोऽयं पुराणः ।

न हन्यते हन्यमाने शरीरे - 'इतीदं गीतावचनं कतिवारमावर्तितमासीत्तेन महाशयेन । तदीय - आत्मा सततं शान्ति-समृद्धस्सर्वत्र शान्तिमाप्लावयतु इति प्रार्थना संस्कृतिश्रियः ।।

# भक्तः वानरः

–श्रीमान् कुमुदप्रसादः , शोधच्छात्रः, मद्रविश्वविद्यालयः, चेन्नै ।

दण्डकारण्ये जीर्णावस्थायां किंचित् विष्णुमन्दिरमस्ति । श्रुयते यत् राज्ञा माधवसेनेन बहुकालात् प्राक् एतत् मन्दिरं निर्मितम् । महाराज्ञः मनःकामना- पूरणार्थं अत्र वनप्रदेशे भगवतः विष्णोः भव्यमन्दिरं निर्मापितमभवत् । तस्मिन् समये राज्ञा देवालयस्य रक्षणावेक्षणार्थं बहुसेवकाः नियोजिताः आसन् । तेषां कृतेअपि आवासानां व्यवस्था कल्पिता राज्ञा माधवसेनेन । प्रतिवर्षं भगवतः विष्णोः मुख्यपूजादिकं अभवत् तत्र । परन्तु तस्य निधनादनन्तरं तस्य पुत्रः वीरभद्रः मन्दिरस्य राज्यस्य च परिपालनं यथापूर्वं न कृतवान् । येन प्रतिवेशिनः शत्रुराजानः तस्य राज्योपरि आक्रमणं कृत्वा तं पराजितवन्तः । अनेन कारणेन तस्य राज्यं पराभूतं अभवत् । सः राजा वीरभद्रः अपि अन्त्यावस्थायां परलोकं गतवान् । विष्णुमन्दिरस्य दैनन्दिन-कार्येषु ये सेवकाः नियोजिताः आसन्, ते सर्वेऽपि क्रमशः ततः पलायितवन्तः, केचन अपि वृद्धत्वं प्राप्तवन्तः । अतः कार्यकारणे असामर्थ्यं प्रदर्श्य ते स्व-स्वग्रामं गतवन्तः ।

देव पूजकत्वेन मधुपुरग्रामस्य रामदासस्य पूर्वजाः राज्ञा निर्दिष्टा आसन् । ते वंशानुक्रमेण विष्णोः पूजनादिकं कृतवन्तः आसन् । पितुः मरणादनन्तरं तत् कार्यं रामदासस्योपरि पतितम् । रामदासः अपि स्वपरिवारस्य

कौलिकवृत्तिं करोति । मन्दिरस्थापनसमये राज्ञा माधवसेनेन काचित् परिमिता भूमिः रामदासस्य परिवाराय दत्ता । येन अद्यावधि तस्य परिवारस्य नित्यनैमित्तिकं कार्यं चलति । रामदासः अपि ग्रामविद्यालये अध्यापनं करोति ।

नातिवर्षपूर्वं वज्रपातेन विष्णुमन्दिरस्य नाट्यमण्डपं भग्नं जातम् । येन मन्दिरस्य सौन्दर्यं किञ्चित् म्लानमजायत । परन्तु तत्र भक्तानां आगमनं भवति स्म । यद्यपि पूर्वापेक्षया सीमिताः एव भक्ताः तत्र आगच्छन्ति, तथापि बहुप्राचीन-देवालयः इति कारणेन उत्सवदिनेषु तत्र जनप्रवाहः भवति । पूजकः रामदासः तत्र प्रत्यहं आगत्य देवार्चनादिकं कार्यं समापयति । मन्त्रोच्चारणपूर्वकं मात्रा लक्ष्म्या सह भगवतः विष्णोः चतुर्बाहुमूर्तिं स्तौति । तत्र विग्रहस्य स्वतन्त्रता अस्ति यत् भगवान् विष्णुः सिंहासने मात्रा लक्ष्म्या साकं विराजमानः भवति । चतुर्बाहुयुक्ते विग्रहे शङ्खं, चक्रं गदा पद्मं च इत्यादीनि शोभन्ते । अपरो हस्तः वरदमुद्राश्चितः तिष्ठति । विग्रहस्य पुरतः करबन्धरूपेण गरुडस्य प्रतिमा अवस्थापितः तत्र । पूजनादनन्तरं रामदासः कियत्कालं तत्र स्थित्वा पुनः स्वकर्मार्थं ग्रामं गच्छति ।

तस्मिन् समये यदि केचन भक्ताः आगच्छेयुः तर्हि रामदासः तान् अभिवादयित्वा पूजां करोति । मन्दिरस्य इतिहासमपि वर्णयति । कस्मिन् स्थाने कस्य प्रतिमा अस्ति, कुत्र सेवकाः आसन्, कुत्र विद्वत्परिषद् अभवत् इत्यादयः विषयाः वर्णनीयतया स्वीकरोति । मन्दिरस्य औन्नत्यार्थं

तेषां सहयोगमपि अभिलषति रामदासः । केचन भक्ताः किञ्चित् दानं ददति, केऽपि न ददति । परन्तु स्वकर्म-निरतः रामदासः केभ्यः अपि स्वकीयां अपेक्षां न साधयति ।

मन्दिरं परितः बहवः वृक्षाः सन्ति । तत्र वनेचराः जीवाः प्रतिवसन्ति । तत्रत्यानां वृक्षाणां फलानि खादित्वा ते वनेचराः जीवन्ति । तत्रापि एकः विशालः वटवक्षः अस्ति । वटवृक्षस्य शाखाः मन्दिरं प्रति आगन्तुनां जनानां पथिकानां वा कृते छायाप्रदानं कुर्वन्ति । येन वनं आगतेभ्यः कृते ग्रीष्मसमये किञ्चित् आनन्दः उपलभ्यते ।

तस्मिन् वटवृक्षे कश्चन मर्कटः प्रतिवसति । सः रामदासं प्रत्यहं पश्यति । एतस्य कार्यमपि पश्यति । यदा रामदासः मन्दिरात् ग्रामं प्रतिगच्छति, तदा एषः वानरः वृक्षात् अवरुह्य मन्दिरस्य अन्तः प्रविशति । प्रविश्य रामदासः यथैव देववन्दनां करोति एषः मर्कटः अपि तथैव तदनुकरणं करोति । हस्ताभ्यां नमस्करोति, भूमौ मस्तकं संस्थाप्य अपि नमस्करोति। एवमेव प्रकारेण सः लक्ष्म्या सह देवं विष्णुं वन्दते । कदाचिदपि सः पार्श्वस्थ-वृक्षात् पत्राणि पुष्पाणि च आनीय देवाय समर्पयति । अपि च अपरस्मिन् दिने रामदासस्य आगमनात् प्राक् एतानि सर्वाणि पुष्पाणि पत्राणि च बहिः निक्षिपति यतः रामदास्य सन्देहः न भवेत् । अननैव प्रकारेण सः वानरः तत्र देववन्दनं कृत्वा वृक्षस्य फलं खादित्वा कालं यापयति ।

एकस्मिन् दिने सः वानरः दृष्टवान् यत्-रामदासः मन्दिरस्य प्राङ्गणसम्मार्जनं करोति इति। सः किं करोति इति वानरः मनसि चिन्तितवान्। अनन्तरदिने स्वयं रामदासस्य आगमनात् प्राक् करे सम्मार्जनीं गृहीत्वा प्राङ्गणस्य सम्मार्जनं आरब्धवान्। तेन कारणेन वानरः आनन्दं अनुभूतवान्। इतः परं वानरः प्रत्यहं प्राङ्गणस्य सम्मार्जनं करोति। रामदासः अपि प्रत्यहं पश्यति यत् प्राङ्गणं सम्मार्जितम्, परन्तु सः कदापि तस्य कारणं ज्ञातुं न चेष्टितवान्। रामदासः चिन्तयति यत् कोऽपि भक्तः आगत्य मन्दिरस्य प्राङ्गणं सम्मार्जयति इति।

एकदा रामदासः मन्दिरे पूजां समाप्य ग्रामं प्रस्थितवान्। तस्य गमनादनन्तरं वानरः अपि स्वकार्ये निरतः आसीत्। मार्गे गच्छन् रामदासः ज्ञातवान् यत् तस्य गृहस्य कुञ्चिका स्वस्य हस्ते नास्तीति। सा कुञ्चिका मन्दिरे स्यात् इति मत्वा सः मन्दिरं प्रत्यागतवान्। मन्दिर-प्रत्यागमनमार्गे सः मनसि चिन्तयन् आसीत् यत् कुञ्चिका कुत्र स्यात्। सः स्मृतवान् यत् कुञ्चिका एकस्मिन् कोटरे अस्ति इति। रामादासः मन्दिरमागत्य वानरस्य पूजनादिकं दृष्ट्वा स्तम्भीभूतः अजायत। तस्य मानसपटले मन्दिरप्राङ्गणस्य परिच्छन्नता-विषयः आगतः। मन्दिरप्राङ्गणस्य सम्मार्जनकर्ता एषः वानरः इति सः ज्ञातवान्। गर्भगृहस्य किञ्चिद्दूरे स्थित्वा वानरस्य हावभावं अपश्यत्। वानरः पुष्पाणि आनीय विष्णोः शिरसि स्थापयति, हस्ते ददाति, जलैः पादौ प्रक्षालयति, पत्राणि विग्रहं परितः स्थापयति च। अनेन प्रकारेण सः वानरः

पूजां करोति। रामदासः मनसि चिन्तितवान् यत् - 'अधुनातनमनुष्याः येषां बुद्धिः अस्ति, इदानीं ते देवपूजनं न कुर्वन्ति, देवलयमपि नागच्छन्ति। देवालयस्य नामश्रवणेन युवानः चिन्तयन्ति यत् देवालयाः वृद्धानामेव गमनस्थानम्। वयं किमर्थं तत्र गच्छामः इति। तथापि केचन आगच्छन्ति पूजार्चनामपि कुर्वन्ति। परन्तु एषः मर्कटः, यस्य बुद्धिरेव नास्ति, सः कथं भक्त्या विष्णुं स्तौति इति आश्चर्यकरमस्ति। एतस्मात् मनुष्याः शिक्षां प्राप्तव्याः। भक्तस्य कृते भक्तिः एव साधनम्। सः भक्तः भगवते यदपि समर्पयति, भगवता तत् सादरं ग्रहणीयं भवति। भगवान् सर्वदा भक्तस्य एव अधीनः। अतः एषः एव परमभक्तः। भगवता गीतायामुक्तं वचनमत्र स्मरणीयम्।

पत्रं पुष्पं फलं तोयं यो मे भक्त्या प्रयच्छति।
तदहं भक्त्युपहृतमश्नामि प्रयतात्मनः ।। *भगवद्गीता-९/१६*

एवं विचिन्त्य रामदासः कुञ्चिकां स्वीकृत्य ग्रामं गतवान्।

अनन्तरदिने रामदासः मन्दिरं शीघ्रमागत्य वृक्षे निवसन्तं वानरं प्रति गत्वा तम् अभिनन्दयित्वा उक्तवान् - पुरा रामायणकाले रामभक्तः हनुमान् तस्य प्रभुभक्तिकारणेन सर्वजनविदितः, इदानीमपि भवान् भगवतः विष्णोः भक्तः। अहो संयोगः। स्वजातेः सम्मानार्थं भवता कृतः प्रयासः अभिनन्दनीयः वन्दनीयः शिक्षणीयः च। सः पुनः उक्तवान् 'अहं तु अत्र प्रत्यहं आगच्छामि, मम वंशपरम्परानुसारं पूजार्चनं करोमि। अहं केवलं कर्तव्यदृष्ट्या कार्यं समापयामि।

किन्तु भवान् इव अहं भक्तः नास्मि । भवान् यथैव अनन्यभक्त्या भगवन्तं सेवते, अहं तथैव करोमि वा न वा न जाने । अतः भक्तस्य विषये याथार्थ्येन कथ्यते-

नाहं तिष्ठामि वैकुण्ठे योगीनां हृदये न च ।
मद्भक्ताः यत्र गायन्ति तत्र तिष्ठामि नारद ॥

निश्चयेन भवतः अनन्यभक्तिं दृष्ट्वा भगवान् विष्णुः अत्र निवसति इति मम विश्वासः । भो ! वानर ! भवान् महनीयः, भक्तः, अन्येषां आदर्शः च । अहं भवन्तमभिवादये ।'

## ॥ श्री त्रिपुरसुन्दर्यष्टकम् ॥

## ஸ்ரீ த்ரிபுரஸுந்தரி - அஷ்டகம்

कदम्बवनचारिणीं मुनिकदम्बकादम्बिनीं
नितम्बजितभूधरां सुरनितम्बिनीसेविताम् ।
नवाम्बुरुहलोचनामभिनवाम्बुदश्यामलां
त्रिलोचनकुटुम्बिनीं त्रिपुरसुन्दरीमाश्रये ॥

கதம்பவனத்தில் வசிப்பவளும், முனிவர்களாகிய கதம்ப வனத்திற்கு மலர்ச்சியை யளிக்கும் முகில் கூட்டமெனத் திகழ்பவளும், மலைபோல் திகழும் கடிபாகத்தை யுடையவளும், தேவ மங்கையர் வழிபட நிற்பவளும், புதுத் தாமரையொத்த கண்களைகளை யுடையவளும். புதிய நீருண்ட மேகம் போன்று கருமேனியுடையவளும், முக்கண்ணர் மனையாளான த்ரிபுரசுந்தரியை சரணடைகிறேன்.

# शिवोत्कर्षमञ्जरीटीका - घट्टार्थबोधनाम्नी ।

(अनुवर्तते)

*–श्री शिवानन्दयोगी, (दिवंगतः)*

ऐहिकानामपि सम्पदां दाता शिव एव, नान्य इत्याह कस्मैचिदिति । पुरा क्षीराभिलाषया रुदते मात्रोपदिष्ट-शिवतत्वाय तपोनिष्ठाय कियदपि याचते क्षीरं कस्मैचित् द्विजबन्धवे येन दयानिधिना दुग्धपयोधिः श्रीवल्लभादि विभवसहित एव दत्तः स मत्स्वामीति ॥ १०

पाशमोचकः शिव एव सर्वोपास्यः । न पशूनामन्योन्योपासकतेत्याह प्रश्नोत्तरभावेन केनेति । दिविचराः केन हेतुना अस्मानतिशेरत इत्यस्योत्तरं - ते श्रुत्या गृहीता हि । श्रुतिरस्मान् नाह किम् ! । तान् सुरान् परतया ब्रूते । परपदस्यान्यार्थत्वमाशङ्क्याह । अस्मान् स्वकान् ब्रूते किमिति पृष्टे - तूष्णीं स्थितिश्चेत् । सुरनरवानरास्सर्वे वयं पशव एव चेत् शिवेतरैरन्यैः किमस्ति । सर्वस्य मोचको यस्स एव मत्स्वामी ॥ ११

अथ श्लेषया परिसंख्यया हरं स्तौति बाणेति । यस्य पुरारेर्बाणो हरिर्बाणकर्म बाणासुरदुश्चेष्टितं न सहते । यस्य ये द्वे चक्रे सोमसूर्यात्मके भवतः । तयोरेकं चक्रं सोमात्मकं चक्रवाकवर्गप्रतीपं विरोधि भवति । इतरत्सूर्यात्मकं चक्रं चक्रानुकूलक्रियं चक्रवाककुलस्य हितकरमित्यर्थः । भुवने यस्य ज्या शेषरूपिणी तु ज्यां क्षोणीं शिरसा बिभर्ति । यस्य सूतः

सारथिश्चतुर्मुखः कचिदपि न सूतः न बभूव स मत्स्वामीति ॥ १२

अध्वरपते र्हरस्यापराधिनस्सर्वे नष्टा बभूवुरित्याह - क्रत्वात्मेति । क्रत्वात्मा यज्ञपुरुषः । क्रतुर्यज्ञः । क्रियारूपो धर्मः । क्रतुभुजः इन्द्रादयः । क्रतूनां वक्ता शुक्रादिः । क्रतोराधारोऽध्वरशाला वेदिका वा । क्रतुकालकल्पनपरौ वसन्ते वसन्ते ज्योतिषा यजेत । अहोरात्रे प्रजापतिः । तस्य कृष्णपक्ष एव रयिः शुक्लः प्राणः तस्मादेत ऋषयः शुक्ल इष्टं कुर्वन्ति । इतर इतरस्मिन्' इति श्रुतेः चन्द्रसूर्यौ क्रतुकालकल्पनपरावित्यर्थः । अमी सर्वेऽप्यध्वरमध्यवर्तिनः यस्य शिवस्याज्ञोल्लङ्घनात् क्रतुकृता दक्षेण सह संहता विनाशिताः भ्रष्टा वैदिकमार्गात् नष्टाश्चाभवन् । तथा वायु - संहितायान् - 'उद्धतांस्त्रिदशान्सर्वान् लोकपालपुरस्सरान् । बिभिदुर्बलिनो वीरा वीरभद्राङ्गसंभवाः ॥

'विव्याध कुपितो बाढं ललाटे विष्णुमप्यथ । ललाटेऽभिहतो विष्णुः पूर्वमेवावमानितः' इति । एवं दक्षकाण्डादौ द्रष्टव्यम् । य एवंभूतो देवस्स मत्स्वामीति ॥ २६ ।

सर्वसुरादिवैभवप्राप्तिः श्रीरुद्रानुग्रहादेव इत्याह - ओरोढुमिति । पुराऽमृतमथनसमये समुत्पन्ने हालाहले येन महेशेनैव प्रशमिते सति । अमृतान्धसः परमौपवाह्य-मैरावतादिवाहनमारोढुं, कन्यका अप्सरः सुन्दरीरपहर्तुं, उपस्थितं भोज्यममृतं च भोक्तुम् । रत्नैस्तनुं सुखमलंकर्तुं च

सन्नह्यन्ति संरम्भिणो भवन्ति स मत्स्वामिति ॥ २४ ॥

शिवः स्वं नैस्पृहेण लोकातीतोऽपि स्वाश्रितान् सर्वस्वदानेन रक्षतीत्याह - स्वयं वास इति । यो देवः आशाम्बरः स्वकीयं वासो दशधा खण्डशो विभज्य भागं कृत्वा विच्छिद्य एकैकस्यैकं खण्डमिति वितरन् दिशान् पाकशासनमुखान् दिशामीश्वरान् पुरा कल्पादौ चक्रे । आनुशासनिके - दिग्वासाः कीर्त्यते कोऽन्यो लोके कश्चोर्ध्वरेतसः इति । अत्र दशेति संख्यावचसा शक्रादि-विष्ण्वन्ता देवास्समुदिताः । एवं विष्ण्वादिदशदिगीशत्वं शिवावरणत्वं च श्रीबोधायनाचार्यादिसूत्रकारैरुक्तम् । इदं चरित्रमेवमस्तु । तस्य शक्तिश्शिवा चिद्रूपाऽपि तादृश्येवेत्याह यत् भिक्षाशन भागभाक् । रुद्रस्य भिक्षाटनं भैरवात्मना वैकुण्ठादिसुरासुर-गर्व-निर्वापणार्थमेव । दारुकावने तु मोहिनीरूपिणा हरिणा सहैव नीवारादितुच्छधान्यान्न-भिक्षामटित्वा तत्सङ्करान्नं त्रिधा विभज्य मायामायिनोस्त-योर्भागं विना स्वात्मभागमवाप्य त्रिजगतां स्वाद्वन्नदात्री चान्नपूर्णेति विजयते स मत्स्वामीति ॥ १५

स्वैरं चरतो यस्य चरणलिखितरेखाहेतिमुपलभ्य हरिः दैत्यारिरभवत् । तादृशो महेश्वरो मत्स्वामीत्याह - स्वच्छन्दमिति । यस्य चरणाङ्गुष्ठाग्रसम्पादिता काचन रेखा जगद्विश्रुतां हेतिराजपदवीं आयुधश्रैष्ठ्यं प्राप्ता । सा पुनर्दैत्यभिदा हरिणा च तपोभिः सहस्रकमलार्चननियमैः तद्वज्ञप्राप्तौ स्वकं लोचनं उपदीकृत्य लब्धा स मत्स्वामीत्यर्थः ।

अत्रैवं कथा विज्ञेया–देवेन्द्रः स्वबिरुदावलीभिः श्रीकैलासं गतः । तत्र द्वाःस्थवेषिणं हरं प्रति समयं पृष्ट्वा तेन धिक्कृतः शक्रो भिया पपात । तत्कोपस्फुलिङ्गपरिणतो जलन्धरासुरो हरदत्तवरदर्पितः सन् लोकानपीडयत् । तमायुधाद्यप्रधर्षं जिघांसुभिर्देवैः अभ्यर्थितो हरः सिद्धवेषधरः चक्राकारं पादाङ्गुष्ठेन लिखित्वा बलदिदृक्षया इवेदं इदमुद्धरेत्युक्तः तथा तदुद्धारमात्रेणासुरो हतः । तच्चक्रं सहस्रकमलनियमाराधनं कृतवते हरये ददौ । पुनर्दक्षयागे वीरभद्रमालाकपालकबलितम् । पुनर्नियमकमलाराधन-भङ्गभीतेन मुकुन्देन स्वनेत्रमुपदीकृत्य तच्चक्रमवापीति दक्षकाण्डवचनम् । 'चक्रं जलन्धरवधाय शिवेन पूर्वं यन्निर्मितं सवितृकोटि समानकान्ति' इति । श्रीविष्णुः–

'वीरभद्र ! महाभाग स्थाने तव पराक्रमम् । वज्रादपि महाभीमं गिरिकोटिप्रभेदनम् । दुर्धर्षमपि मच्चक्रं यत्त्वयाऽऽलिङ्गितं दृढात् ।। तस्मादद्य शिवद्रोहकारिणं जहि दुर्धियम् । कालान्ते महेशस्य कृत्वा च बहुधा तपः । अहं प्राप्स्यामि मच्चक्रं त्वद्गुरोः परमेश्वरात्' - इति । इत्थं प्रभावो यः स मत्स्वामीत्यर्थः ।। १६ (अनुवर्तते)

शिवा रुद्रस्य भेषनी । तया नो (नु) मृडजीवसे ।

ஶிவை-என்ற பார்வதீ ருத்ரருக்கு மருந்தாவாள், அவளால் அல்லவோ ஹே ருத்ரதேவ ! நீர் பிழைத்திருக்கிறீர் !

न शम्भोस्तन्मूलं तव जननि ताडङ्कमहिमा ।

கொடிய கால கால விஷத்தை விழுங்கியபின் சிவன் மாறாமல் களித்திருப்பது, எம் தாயின் தாடங்க வலிமையாலன்றோ ! –ஆதிஶங்கரர்

# பவானீ பாரதி

–தமிழ் உரை P.R. கண்ணன், நவீ மும்பை.

பிரீதி என்பது எல்லா உயிர்களிடத்தில் எந்தவித காரணமும் இன்றி, எதிர்ப்பார்ப்பும் இன்றி காட்டவேண்டிய அன்பு. அகிம்ஸை இதில் அடக்கம். அன்பிலிருந்து அருள் சுரக்கும். தயை என்பது எளியவர்களிடம் காட்டவேண்டிய கருணை. தைரியம் என்பது தர்ம வழியில் நிலைபெற்று நிற்கும்போது எதிர்ப்படும் இன்னல்களை எதிர்த்து முறியடிக்கும் மனத்திண்மை. அடக்க வொண்ணு வீர்யம் என்பது தைரியத்திலிருந்து உதிக்கும் சக்தியும், எதிரிகளை விரட்டியடித்து வெற்றி கொள்ளவைக்கும் செயற்கூறும் ஆகும். சிரத்தை என்பது வேத சாஸ்திரங்களிலும், குருவின் வாக்கியத்திலும், இருக்க வேண்டிய அசைக்க முடியாத நம்பிக்கை. அவற்றைப் பின்பற்றும்போது கஷ்டங்கள் நேரும். அக்கஷ்டங்களை எதிர்ப்பட மன உறுதி அவசியம். அந்த மன உறுதி, இந்த ஶ்ரத்தை அழுத்தமாக ஆழமாக வேருன்றியிருந்தால்தான் வரும். 'திதிக்ஷா' என்பது பலவித கஷ்டங்கள் வரும்போது, இவை நம்முடையய பிராரப்த கர்மத்தின் விளைவேயன்றி வேறல்ல என்கிற உறுதியுடன், பொறுத்துதுக்கொள்ளும் மனப்பாங்கு ஆகும். பலவித வித்தைகள் என்பது நாம் இப்போது விரிவாகவே பார்க்கும் விஜ்ஞானத்தின் பல்வேறு கூறுகளும், ஆத்மீகத்தின் பல்வேறு நெறிமுறைகளும், வாழ்க்கை ரகசியங்களும்ஆகும்.

துர்கா ஸப்தஶதியில், சும்பநிசும்ப வதத்தின் பொருட்டு தேவர்கள் தேவியை ஸ்தோத்திரம் செய்யும்போது, எல்லா ஸத்குணங்களையும் சொல்லி, அந்த குணங்கள் எல்லாம் அம்பிகையிடமிருந்துதான் கிடைக்கின்றன என்கிறுர்கள். மங்களம், மாயை, சைதன்யம், புத்தி, நித்திரை, பசி, பிரதிபிம்பம, சக்தி, வேட்கை பொறுமை, ஜாதி, வெட்கம், சாந்தி, சிரத்தை, காந்தி, செல்வம், ஜீவனோபாயம், ஞாபகசக்தி, தயை, திருப்தி, தாயார், குழப்பம், வியாபகம், ஞான சக்தி இவைகளெல்லாம் அம்பிகையின் ரூபங்களே

என்று துதி செய்கிறார்கள்.

**सिन्धून् हिमाद्रिश्च सुसौम्यभासा प्रकाशयन्ती सुदृढप्रतिष्ठा ।**
**तिष्ठ प्रसन्ना चिरमार्यभूमौ महाप्रतापे जगतो हिताय ॥**

(ப—உ) **महाप्रतापे** = பெரும் தேஜஸும், வீரமும் பொருந்தியவளே, **सिन्धून्** = சமுத்திரங்களையும், **हिमाद्रिं च** = இமயமலையையும், **सुसौम्यभासा** = அழகான குளிர்ந்த பிரகாசத்தினால், **प्रकाशयन्ती** = ஒளியைப் பெருக்கிக் கொண்டு; **सुदृढप्रतिष्ठा** = நன்கு ஸ்திரமாக இருந்துகொண்டு, **प्रसन्ना** = சந்தோஷத்துடன், **जगतः हिताय** = உலக நன்மைக்காக, **आर्यभूमौ** = ஆரிய பாரத பூமியில், **चिरं तिष्ठ** = வெகு காலம் இருப்பாயாக.

(பொ—உ) பெரும் தேஜஸும், வீரமும் பொருந்தியவளே; சமுத்திரங்களையும், இமயமலையயும் தன் குளிர் ஒளியினால் பிரகாசப்படுத்திக்கொண்டு, நன்கு ஸ்திரமாக இருந்துகொண்டு, சந்தோஷத்துடன் உலக நன்மைக்காக ஆரிய பாரத பூமியில் வெகு காலம் இருப்பாயாக.

(வி—உ) கவதையின் இறுதிக்கட்டத்திற்கு வந்துள்ள கவிஞர், தேவியிடம் மங்களாசாஸனம் செய்கிறார். ஆழ் சமுத்திரங்களும், நெடி துயர்ந்த இமயமலைச் சிகரங்களும் தேவியின் வைபவத்தை சுலபமாக உணரவைக்கக் கூடியவை. தேவியின் பரந்த ஆழமான, அதே சமயம் உயர்ந்திருக்கும் ஞான சக்தியை மனிதனின் குறுகிய அறிவைக் கொண்டு அளக்கவோ அறியவோ முடியாது. தேவியின் சந்தோஷம் என்பது க்ருபையாக வடிவெடுக்கிறது. தேவியின் ஸாந்நித்தியம் பாரத பூமியில் நன்கு ஸ்திரமாக பிரகாசமாக இருக்க வேண்டும் என்று பிரார்த்திக்கும் கவிஞர்,அது பாரத தேசத்தவர்களின் நன்மைக்காக மட்டுமில்லை, உலகம்

முழுவதும் நன்மையடைதற்காகவே என்பதையும் காட்டுகருர். ஏற்கெனவே உலகெங்கருந்தும் பாரதம் வந்து இங்குள்ள ஆத்மீக பாரம்பரியத்தையும், தேவியின் சித்விலாஸத்தையும் அனுபவித்து தாங்களும் அதைத் தங்கள் தேசங்களில் பரப்ப உத்ஸாகமாக இருப்பதை கவிஞர் காண்பித்திருக்கிருர். அதனுல், பாரத பூமியை உலகின் ஆத்மீக மையமாகக் கொண்டு, தேவியின் க்ருபை பாரத பூமியில் வெகுவாகப் பிரகாசித்து வருகையில், அதன் கதிர்கள் நாலாபக்கமும் பரவி இருளை அகற்றி உலகம் முழுவதையும் தார்மீகப் பாதையில் வழிகாட்டி அழைத்துச் செல்கின்றன. இந்த நிலை வெகு காலம் தொடர்ந்து நடக்க வேண்டும் என்பது கவிஞரின் அவா, பிரார்த்தனை.

हृद्यैरुद्रीन्द्रकन्यामृदुदशनपदैर्मुद्रितो विद्रुमश्री-
रुद्द्योतन्त्या नितान्तं धवलधवलया मिश्रितो दन्तकान्त्या ।
मुक्तामाणिक्यजालव्यतिकरसदृशा तेजसा भासमानः
सद्योजातस्य दद्यादधरमणिरसौ सम्पदां सञ्चयं नः ।।

ஹ்ருத்யைருத்ரீந்த்ரகந்யாம்ருது
தஶநபதைர்முத்ரிதோ வித்ருமஸ்ரீ:
உத்யோதந்த்யா நிதாந்தம் தவலதவலயா
மிச்ரிதோ தந்தகாந்தயா !
முக்தாமாணிக்யஜாலவ்யதிகர
ஸத்ருஶா தேஜஸா பாஸமாந: ।
ஸத்யோஜாதஸ்ய தத்யாததரமணி
ரஸெள ஸம்பதாம் ஸஞ்சயம் ந: !!!

மலையரசன் மகளின் மெதுவான பல் முத்திரை பதிந்ததும், வெள்ளை வெளேரென பளிச்சிடும் தனது பற்காந்தியுடன் சேர்ந்து விளங்குவதுமான ஸ்தயோஜாதனனின் கீழ் உதட்டுதடம் எங்களுக்கு செல்வச் செழிப்பை உண்டாக்க வேணுமே. அந்த உதடு காண்போருக்கு முத்தும் பவழமும் ஒன்று கல்நதாற்போல் தோன்றுமே !

--ஸ்ரீ ஶங்கர பகவத்பாதர்

# श्रीमत्परशुरामायणम्-विजयकाण्डः ।

## षष्ठः सर्गः

*–कविः निष्ठल सुब्रह्मण्यशास्त्री, पोन्नूर् (आ.प्र.)*

विघ्न इत्यृषिभिः प्रोक्तं आत्माभिन्नं परं महः ।
वैकुण्ठे चक्षुषां पूर्वं शेष्यासीद्विष्टरश्रवाः ॥ १

नीलतोयदसञ्चारि विद्युत्तुल्यं महाद्भुतम् ।
धृष्टयो यत्तनूजातास्सिद्धयोऽष्टाविति स्मृतिः ॥ २

य ओषधीष्वप्सु तिष्ठन्मह्यां यस्ता नियम्यति ।
यस्य निश्वसितं चासीच्छ्रुतिः परमपावनी ॥ ३

स्तनयित्नुर्नीलनीलः श्रुतिसुन्दरगर्जनः ।
नीवारशूकतन्वी श्रीः ललम्बे श्वेतपादपे ॥ ४

सहस्राक्षेडितो विष्णुः विराट्प्रभुरुदारधीः ।
कृपारसं विषिञ्चानः सस्मितेक्षणगैश्शुभैः ॥ ५

नारदस्त्वरयाऽऽगत्यं चास्तुवीत जनार्दनम् ।
दानवीयं तमो भित्त्वा त्वं सहस्रांशुराभवः ॥ ६

द्विषन्मधुं पुरा शान्तिमधुबिन्दूनवाकिरः ।
त्वत्पादपद्मसञ्चारिभृङ्गेभ्यः काङ्क्षितार्थदः ॥ ७

सुरारयस्त्वया नुन्नाः देवास्सन्तः प्रपालिताः ।
विना त्वदीयशौर्याणि गाथा नैका महीतले ॥ ८

इति श्रुत्वा मुनेर्वाक्यं तूष्णीमास त्रिकालवित् ।
चक्रं तु सुभगम्मन्यमब्रूतैवं सुदर्शनम् ॥ ९

मया विना शितारेण विष्णोर्नैवास्ति वीरता ।
जिष्णुता साक्षिणश्चास्य कोशातकीघृतोपमा ॥ १०

विष्णुर्निमित्तमात्रं हि दैत्यानां हनने सदा ।
छुरिकाशातधारेण कृत्ता कण्ठाटवी मया ।। ११

मधुर्नाम पुरा दैत्यः विष्णुतुल्यपराक्रमः ।
रक्षस्स्वपि महात्मानः सन्ति वीर्यबलोत्कटाः ।। १२

सौदर्शनीं गिरं श्रुत्वा विष्णुर्दैत्यमदापहः ।
प्रावृषेण्य इवामन्दं गर्जयन्निव चाब्रवीत् ।। १३

दैवत्वमाप्नुवानोऽपि स्वाहङ्कारेण दर्पितः ।
सुदर्शनादर्शनतां भजन्जनिमवाप्स्यसि ।। १४

जितेन्द्रिया निराहाराः दान्ताश्शान्ता महाधियः ।
सात्त्विकास्सात्वतां पत्यू रूपे स्थापितबुद्धयः ।। १५

तादृशां ब्राह्मणानां हि मध्ये नारद उन्नतः ।
सरस्वतीविधातारौ पितरौ यस्य स ह्यजः ।। १६

अहङ्कारववचो विप्रनिकटे पातकं महत् ।
अयथार्था तवेयं वाक् ततो जनिमवाप्स्यसि ।। १७

विप्रात्पराभवं लब्धा विप्रपार्श्वात्मसंस्तुतेः ।
पातकायोपकुर्वाते परनिन्दात्मसंस्तुती ।। १८

रमतेऽप्सुषु यस्तीव्रः स दैत्यश्शंसितस्त्वया ।
अतस्तदासुरीशक्त्या युक्तस्त्वं जनिमाप्नुहि ।। १९

ब्राह्म्यं जानातु ते क्षात्रं ततो ज्ञानमवाप्स्यसि ।
परात्मबलविज्ञानं यत आवश्यकं नृणाम् ।। २०

इति शप्तः परंज्योतीरूपेण परमात्मना ।
न लज्जालुर्न वै तप्तः ब्राह्म्यं सन्देग्धि च स्म सः ।। २१

(अनुवर्तते)

# मुक्तकमौक्तिकानि ।

—श्री सुन्दरराजः I.A.S. (Retd.) भुवनेश्वरम् ।

तिरुवल्लुवर् महात्मानमुपश्लोक्य

मूर्त्याऽतिवामन इति प्रथिते स्वकीर्त्या
छन्दस्यधात् कुरलिति स्वयमेकवेदम् ।
यो वल्लुवर् द्रमिडवाचि यथार्थनामा
सत्यंवदो जयति सत्यमयं मुनिर्नः ।।

हन्त मुण्डे दिवं गतः

निमित्तं किंचिदासाद्य नरः प्राणैर्वियुज्यते ।
इति लोकप्रवादेऽपि यदुक्तं न तदन्यथा ।।
भारतीयजनतादले स्थितं मुण्ड इत्यभिहितं स्वमुण्डवत् ।
ह्यो हि मन्त्रिपदवीमधिष्ठितं प्रातरद्य शृणुमो दिवं गतम् ।।

सद्धर्मविद्रावणं

नारीकर्षणधर्षणानि दधतेऽप्येकाकिनस्साकिनैः
एके कापुरुषाः क्रूराः खलाः कातराः ।
मातृत्वस्य विडंबनं मृगदृशामुद्धन्धनं मारणं
वैरद्वेषविवर्धनं कथमिदं सद्धर्मविद्रावणम् ।।
नारीं पश्यन् स्पृशन् जिघ्रन् कर्षन् भुंजन् प्रधर्षयन् ।
प्रघ्नन् निघ्नन् अथोद्धघ्नन् अचिरान्नरकं व्रजेत् ।।

स्मृतिस्त्विरानीति हि मंत्रिणीन्धे

श्रुतेरिवार्थं स्मृतिरन्वगच्छत् इत्याह काव्ये कविकालिदासः ।
आद्यान्विता विश्रुतिविस्मृतिभ्यां स्मृतिस्त्विरानीति हि मंत्रिणीन्धे ।।

वन्दे कारु ब्रह्मदारूरु

मा गा गणपतिभट्ट पश्याहं स इति दर्शयिष्यत् स्वम्।
सुन्दरसिंदुरवदनं वन्दे कारु ब्रह्मदारूरु ॥

अमी दधति पैशुनीमहह पृष्ठतः कष्टदाः

परस्परजिगीषया परममत्सरीर्ष्यापराः
चरन्ति भुवने खलाश्छलमलिंलुचाः जाग्रत।
वदन्ति मधुरं वचस्तव पुरो यशो गायकाः
अमी दधति पैशुनीमहह पृष्ठतः कष्टदाः ॥

ओडिया वा ओडीया वा

देशोऽयमोड्रो जन ओड्रियोऽस्य
भाषा भवत्यस्य तथौड्रियेति।
रेफस्य डेर्लोपत ऊढदैर्घ्यात्
ओडीयभाषा जनताऽप्योडीया ॥

श्रीवैष्णवस्सततमेष हरिं नमामि

केचित् भजन्ति तपनं गगने ज्लन्तं
अन्ये भजन्ति शशिनं निशि दृश्यमानम्।
शक्तिं शिवं गणपतिं गुहमप्यथैके
श्रीवैष्णवस्सततमेष हरिं भजामि ॥

चाराकारोऽस्ति जातस्तनुम इह तनोरंजलिं चारुणस्ते
रूढस्त्वं तालवृक्ष स्वयमयमभवस्तालवन्यां कुतश्चित्
काले संवृध्य पीनः प्रकृतिपतनवान् पातितः काष्ठिकैर्वा।
नीतश्श्रीमंदिरं सन् रथमधि जगतां नाथमारोपयिष्यन्
चाराकारोऽसि जातस्तनुम इह तनोरंजलिं चारुणस्ते ॥

(अनुवर्तते)

# किरातार्जुनीये प्रथमसर्गे सप्तविंशः श्लोकः

—*—

निशम्य सिद्धिं द्विषतामपाकृतीः
ततस्ततस्त्या विनियन्तुमक्षमा ।
नृपस्य मन्युव्यवसायदीपिनीः
उदाजहार द्रुपदात्मजा गिरः ॥

पदच्छेदः —

निशम्य, सिद्धिं, द्विषताम्, अपाकृतीः, ततः, ततस्त्याः, विनियन्तुम्, अक्षमा, नृपस्य, मन्युव्यवसायदीपिनीः, उदाजहार, द्रुपदात्मजा, गिरः ॥ (१४ पदानि)

शब्दधातुरूपाणि—

निशम्य - ल्यप्, अव्य

ततः - अव्य

विनियन्तुम् - तुमु.अव्य

सिद्धिम् - सिद्धिं सिद्धी सिद्धीः - इका.स्त्री.द्वि.एक. ।

द्विषतां - द्विषतः द्विषतोः द्विषतां - तका.पु.ष.बहु ।

अपाकृतीः - अपाकृतिं अपाकृती अपाकृतीः - इका.स्त्री.द्वि.बहु ।

ततस्त्याः - ततस्त्यां ततस्त्ये ततस्त्याः - आका.स्त्री.द्वि.बहु ।

अक्षमा - अक्षमा अक्षमे अक्षमाः - अका.स्त्री.प्र.एक।

नृपस्य - नृपस्य नृपयोः नृपाणां-अका.पु.ष.एक।

मन्युव्यवसायदीपिनीः - दीपिनीं दीपिन्यौ दीपिनीः ईका.स्त्री.द्वि. बहु।

उदाजहार - उद इत्युपसर्गपूर्वक 'हञ् हरणे' धातोः उदाजहार जह्रतुः जह्रुः इति लिटि.प्र.पु.एक.।

द्रुपदात्मजा - आत्मजा आत्मजे आत्मजाः- आका.स्त्री.प्र.एक

गिरः - गिरं गिरौ गिरः - रेफान्तः स्त्री.द्वि.बहु।

### प्रतिपदार्थः

द्रुपदात्मजा - திரௌபதி, द्विषतां = பகவர்களின், सिद्धिं = அபிவிருத்தியைப் பற்றி, निशम्य = கேட்டு, ततः - பிறகு, ततस्त्याः = அப்பகைவர்களிடமிருந்து, வந்த, अपाकृतीः = கஷ்டங்களை (அவர்களால் உண்டான துக்கங்களை), विनियन्तुं - அடக்குவற்கு; अक्षमा (सती) - சக்தியற்றவளாக (இருந்துகொண்டு), नृपस्य - யுதிஷ்டிரருக்கு, मन्युव्यवसायदीपिनीः - கோபம், முயற்சி இரண்டையும் தூண்டக் கூடிய, गिरः - சொற்களை, उदाजहार - கூறினாள்.

### व्याकरणविशेषः—

द्रुपदात्मजा - द्रुपदस्य आत्मजा

द्विषताम् - द्विषन्तीति द्विषः। द्विषः + शतृप्रत्ययः तेषाम्।

ततस्त्याः - ततः (शत्रुभ्यः) आगताः । 'अव्ययात् त्यप्' इति पाणिनिसूत्रम् । ताः ।

अक्षमा - क्षमते इति क्षमा, न क्षमा अक्षमा ।

मन्युव्यवसायदीपिनीः - मन्युश्च व्यवसायश्च मन्युव्यवसायौ, तौ दीपयन्तीति तच्छीला मन्युव्यवसायदीपिन्यः ताः ।

कोषः

मन्युर्दैन्ये क्रतौ क्रुधि
सिद्धिस्तु मोक्षे निष्पत्तियोगयोः
रिपौ वैरिसपत्नारिद्विषद्वेषिणदुर्हृदः

भावार्थः

दुर्योधनेन प्राप्तं सर्वतोमुखं जयं श्रुत्वा, तत्कृतकष्टजस्मरणेन जातं दुःखं सोढुमपारन्ती द्रौपदी, युधिष्ठिरस्य कोपं प्रोज्वलयितुं व्यवसायमुत्पादयितुं च कृतनिश्चया काश्चन गिरः बभाषे ॥

अष्टाविंशः श्लोकः

भवादृशेषु प्रमदाजनोदितं
भवत्यधिक्षेप इवानुशासनम् ।
तथापि वक्तुं व्यवसाययन्ति मां
निरस्तनारीसमया दुराधयः ॥

पदच्छेदः — भवादृशेषु, प्रमदाजनोदितं, भवति, अधिक्षेपः, इव, अनुशाशनम्, तथापि, वक्तुं व्यवसाययन्ति मां, निरस्तनारीसमयाः दुराधयः । (१२ पदानि)

## शब्दधातुरूपाणि

भवादृशेषु - भवादृशे भवादृशयोः भवादृशेषु । अका.पुं.स.बहु ।

प्रमदाजनोदितं - प्रमदाजनोदितं जनोदिते जनोदितानि अका.नपु.एक ।

भवति - भवति भवतः भवन्ति 'भू सत्तायां' धातोः लटि.प्र.पु.एक ।

अधिक्षेपः - अधिक्षेपः अधिक्षेपौ अधिक्षेपाः अका.पु.प्र.एक ।

इव, तथापि - अव्य ।

अनुशासनं - अनुशासनं अनुशासने अनुशासनानि - अका.नपुं. एक ।

व्यवसाययन्ति - व्यवसाययति व्यवसाययतः व्यवसाययन्ति । लटि.प्र.पु.बहु ।

मां - मां-मा अवां-नौ अस्मान्-नः - दका. अस्मद् द्वि.एक ।

निरस्तनारीयमयाः - निरस्तनारीसमयः समयौ समयाः अका.पु.प्र.बहु ।

दुराधयः - दुराधिः दुराधी दुराधयः - इका.पु.प्र.बहु ।

प्रतिपदार्थः—

भवादृशेषु - தங்களைப் போன்ற சிறந்த அறிவாளிகளின் விஷயத்தில், प्रमदाजनोदितं = ஸ்த்ரீ ஜனங்களால் கூறப்படும்,

अनुशासनं - அறிவுரை, अधिक्षेपः इव - அவமதிப்பு போல், भवति = ஆகின்றது, तथापि - ஆயினும், निरस्तनारीसमयाः - பெண்களுக்குரிய (அடக்கம் முதலிய) நடத்தைகளை நீக்கிய, दुराधयः - (மனத்திலுள்ள) தாங்க முடியாத கஷ்டங்கள், मां = என்னை, वक्तुं = பேச, व्यवसाययन्ति = தூண்டுகின்றன.

व्याकरणविशेषः—

भवादृशेषु - भवन्तः इव दृश्यन्ते इति भवादृशाः तेषु ।

प्रमदाजनीदितं - प्रमदा एव जनः प्रमदाजनः । तेन उदितम् ।

निरस्तनारीसमयाः - नारीणां समयाः नारीसमयाः । निरस्ताः नारीसमयाः यैः ते ।

दुराधयः - दुष्टाः आधयः ।

कोषः

'प्रमदा मानिनी कान्ता ललना'

'पुंस्याधिर्मानसी व्यथा'

'समयाः शपथाचारकालसिद्धान्तसंविदः'

भावार्थः

राजन् तत्रभवान् लोकज्ञः नीतिज्ञश्च । भवादृक्षु स्त्रीजनैः अस्माभिः कर्तव्यमधिकृत्य यदि उच्यते तर्हि तत् अधिक्षेपतुल्यं गण्येत । अथापि तूर्ष्णीं स्थातुं नाहं प्रभवामि । मम स्वान्ते स्थिताः अतिमात्रक्लेशदायिनः आधयः स्त्रीणामवश्यापेक्षितां शालीनतामपि विहाय मां भाषितुं प्रेरयन्ति ॥

—रङ्गनाथशर्मा, सं.वि.स. काञ्चीपुरम् ।

# सङ्कटमोचन शतकम् । (अनुवर्तते)

–मिश्रोऽभिराजराजेन्द्रः, पूर्वकुलपतिः, शिमला।

यदवाप्य रजःकल्पं सुखं निमिषभङ्गुरम् ।
जना अज्ञा पप्रगल्भन्ते तत्र मे न रतिः प्रभो ॥ ६४

लोष्टकल्पं धनं मन्ये धूमकल्पञ्च वैभवम् ।
रूपसौन्दर्यप्रतिमां स्त्रियञ्च शालभञ्जिकाम् ॥ ६५

सप्तभूमिकसौधञ्च कृत्रिमपुत्रकागृहम् ।
सांसारिकमैश्वर्यञ्च मन्ये कान्तारसन्निभम् ॥ ६६

संसारे न रतिर्मिथ्या संसारो नैव रोचते ।
किन्त्वसावेव संसारो मम भग्यनियन्त्रकः ॥ ६७

अनभीष्टसंसारेण यदहं नित्यमन्त्रितः ।
तदेव मम दौर्भाग्यं परिसन्तापकारणम् ॥ ६८

यस्मिन्ममावमन्तारः मम सन्तापदाः खलाः ।
पदे पदे विलोक्यन्ते पथि विस्तीर्णकण्टकाः ॥ ६९

नाटके ननु तत्रैव समवस्थातुमायुषि ।
आज्ञप्तोऽस्मि जगन्नाथः कीदृशीयं विडम्बना ॥ ७०

हंसः कथं वसेद्बाके गन्धो दुर्गन्धसञ्चये ।
सहकारः कपित्थानां समवाये वसेत्कथम् ॥ ७१

कर्पूरं हिङ्गुपिटके वा सं कुर्यात्कथं प्रभो ।
संसारविमुखो रज्येत्संसारे कथमुत्थितः ॥ ७२

इयमेव समस्या मे आञ्जनेय ! समीरज ! ।
अस्या एव समाधानं मे स्वभक्ताय निर्दिश ॥ ७३

आयुषस्सप्ततिं नाथ सम्प्रति पारमाम्यहम् ।
अवरोहणमार्गेऽस्मि समाधानं ततो वृणे ॥ ७४

ध्रुवं जानासि नाथ त्वं कलौ भक्तास्त्रयाश्रयाः ।
परम्बा तत्र चैका सा, गङ्गा त्वं च तृतीयकः ॥ ७५

प्रत्यक्षदेवताश्चैता अन्तिकस्था दिवानिक्षम् ।
आर्तिश्रुतावुदाराश्च भक्तोद्धारणतत्पराः ॥ ७६

भक्तिध्यानैर्महामाया प्रह्वीभवति निश्चितम् ।
नित्यं स्नानेन पानेन मुक्तिदा जाह्नवी मता ॥ ७७

त्वमेव चात्मभक्तानामाञ्जनेय ! दयानिधे ! ।
विरोधियन्त्रणाजन्यक्रन्दितैः परिधावसि ॥ ७८

साक्षात्स्वजनकल्पस्त्वं तस्मान्नाथ प्रतीयसे ।
संहारको विरुद्धानां सङ्कटानां प्रमोचनः ॥ ७९

निमज्जम् विपदां सिन्धौ ततस्त्वामेव कीर्तये ।
परित्राहि परित्राहि त्राणदक्ष महाबलिन् ॥ ८०

दौर्भाग्यैर्दलितश्चापि हसितो मदगर्वितैः ।
सोपानकृपया चाट्टं रूढैश्च रवञ्जपङ्गुभिः ॥ ८१

छलच्छद्माग्रहोपायैरकस्मादेव वर्धितैः ।
महाजनाग्रगण्यैश्च पापषड्यन्त्रसंश्रयैः ॥ ८२

सनिकारं सदा दृष्ट ऐश्वर्योन्मादरञ्जितैः ।
नाऽहं बिभेम्युदासीनस्त्वदेकाक्षतसंश्रयः ॥ ८३

योऽप्यहं यादृशश्चां यथाऽहं वा यदर्थकः ।
तवाऽहं केवलं नाथ ! त्वमेव प्रकृतिर्मम ॥ ८४

त्वन्मयत्वप्रलीनस्य न मे काऽपि त्वयाऽधुना ।
तवैव सन्ति सर्वाणि मद्दुःखानि सुखानि च ॥ ८५

यथाऽङ्गस्य कस्यापितदीया सत्यपि ध्रुवम् ।
पीडा भवति कायस्य सकलाङ्गाभिमानिनः ॥ ८६

अनुकूलाः प्रतिकूला भोगास्तद्वन्ममापि च ।
भवतामेव वज्राङ्ग ! सन्ति सर्वे, न मामकाः ॥ ८७

आत्मपार्थक्यविस्मृत्या त्वन्मयत्वस्मृतेन च ।
आञ्जनेय ! सुखं सर्वं निष्प्रयत्नमवाप्यते ॥ ८८

इयं नु मामकी श्रद्धा भवदङ्घ्रिरतिः प्रभो ।
नैयून्यं न भजेत् क्वापि वर्धतामुत्तरोत्तरम् ॥ ८९

अमरोऽसि कलावस्मिन्नजरोऽपि कपीश्वर ।
गुणानां शेवधिर्देव ! धरित्रीकन्यकाऽऽशिषा ॥ ९०

विपदम्भोनिधौ मग्ना यथा माता विदेहजा ।
त्वया समुद्धृता देव ! मां तथैव समुद्धर ॥ ९१

गतप्रायाऽसुसौमित्रिः सञ्जीवन्या यथोत्थितः ।
तथा संशयितप्राणं मामपि जीवय प्रभो ॥ ९२

वने ज्वलति दावाग्निः वाप्यम्बु विषमिश्रितम् ।
दिक्षु व्याधाश्च धावन्ति कुत्र यातु मृगोऽधुना ॥ ९३

पयोद एव शरणं दावं शमयितुं क्षमः
शोधयितुश्च वाप्यम्बु व्याधानपि निवारितुम् ॥ ९४

पयोदकल्पो नाथ त्वं मृगकल्पोऽस्म्यहं न किम् ? ।
रक्ष मामञ्जनासूनो! कृपावारिप्रवर्षणैः ॥ ९५

प्रलपन्नथवा शब्दै रोदिष्यामि कियच्चिरम् ।
शब्दाश्चापि समाप्ता मे शुष्कं नयनयोर्जलम् ॥ ९६

स्वजनाऽन्यतमो नाथ ! कियद्विलपितुं क्षमः ।
इत्यपि ज्ञातमेवाऽस्ति भवतो, नाऽत्र संशयः ॥ ९७

रोदनेन च सन्तुष्टः कियन्मात्रेण कस्य वा ।
समायास्यसि रक्षार्थं, प्रमाणमत्र कोऽपरः ॥ ९८

पुष्पकल्पोऽस्म्यहं नाथ ! तरुवृन्तच्युतज्ञः खलु ।
पादपद्माऽर्पितस्तेऽहं भवानेव गभिर्मम ॥ ९९

नाङ्गीकुरुषे यदि मां निर्गतिको भवाम्यहम् ।
इतो भ्रष्टस्ततो भ्रष्ट उभयत्र तिरस्कृतः ॥ १००

शोणितैर्लिखितो नूनं मया प्राभञ्जनेः स्तवः ।
नायं काव्यमिव ग्राह्यः शब्दक्रीडाविचेष्टितम् ॥ १०१

आधिविद्धं मनो व्यक्तं, विलपन्ती च चेतना ।
विशीर्णं जीवनं चात्र शतके प्रस्तुतं ममा ॥ १०२

यद्विधातु क्षमश्श्वासं तन्मया विहितं मुदा ।
कि करोतीति द्रष्टव्यमञ्जनानन्दनोऽधुना ॥ १०३

शारदे नवरात्रेऽस्मिन्नष्टम्यां शनिवासरे ।
गुणेन्दुव्योमयुग्माब्दे रवैस्ते मञ्जुप्रभातके ॥ १०४

मिश्रोऽभिराजराजेन्द्रः स्तवं सङ्कटमोचनम् ।
सम्पूरयति सामोदं श्रावयन् सौम्यगेहिनीम् ॥ १०५

*॥ इति श्री गौतमगोत्रीयमभयास्पदेन मिश्रवंशावतंसेन ब्रह्मर्षि - महामहोपाध्यायपण्डितरत्नाद्यलङ्कारभाजनेन द्विशताधिक- काव्यनाट्यकथासमीक्षाकृतिकारेण त्रिवेणीकविना अभिराजराजेन्द्रण विरचितं सङ्कटमोचनशतकं सम्पूर्णम् ।*

# आयुर्वेदोपदेशेषु विधेयः परमादरः

(Dhwani, BAMS, Sri Jayendra Saraswathi Ayurveda Collge, Nazhartpet, Chennai-123)

पिण्डे पिण्डे मतिर्भिन्ने''त्युक्तिरस्ति। प्रत्येकं मनुष्यस्य विचारः भिन्नोऽस्ति। तथैव प्रत्येकं मनुष्यस्य जीवलक्ष्यमपि भिन्नं वर्तते। लोके सर्वेऽपि जनाः तें लक्ष्यं साधयितुं प्रयतन्ते। अस्मिन् यत्ने सर्वेऽपि इतस्ततः धावन्ति, सर्वदा चिन्ताग्रस्ताः भवन्ति च। सर्वेऽपि उन्नतं स्थानं प्राप्तुमिच्छन्ति। अस्यां स्थितौ प्रतिपदं चित्ते स्वलक्ष्यैकमात्रमनुस्मरन्ति। स्वसुखं, सज्जनं, गृहम्, ईश्वरमपि विस्मृत्य लौकिकसम्पदं संपादयितुं कार्याणि कुर्मः। एवं यान्त्रिजीवनेन किं प्रयोजनम्, किं वा साधयेम? यथेच्छं सम्पत्तिं प्राप्यापि सुखं नानुभवामः।

किञ्चित्तिष्ठाम, आत्मानं पश्याम - सुखं नास्ति, शान्तिर्नास्ति, स्वास्थ्यं नास्ति। यं प्राप्तं धावामः, तस्यैव अभावः अस्ति। किन्तु सांप्रतिके यान्त्रिके काले एवं धावनं न त्यक्तुं शक्यम्। बहुधा विचार्य, अस्मिन् धावने सुखस्य योजनं कथं कर्तुं शक्नुमः इति प्रश्नः समुत्पद्यते। तस्य समाधानमस्ति आयुर्वेदः। अस्मत्पूर्वजाः सुखजीवनार्थममूल्यान् विषयान् प्रोचुः। तत्र चित्तस्वास्थ्यार्थं, शरीरस्वास्थ्यार्थञ्च उपायाः भवन्ति। तें वाक्येषु विद्यमाना सत्यता अमृतत्वाय कल्पते। येन तेषां वचोनुसारम् अद्यापि कर्मसिद्धिर्भवति। उदाहरणार्थम्—

—'ब्रह्मे मुहूर्त्त उत्तिष्ठेत् स्वस्थो रक्षार्थमायुषः।'

(अष्टाङ्गहृदयम्, सूत्रस्थानम् द्वितीयोऽध्यायः)

—'लिखेदनुसुकं जिह्वां जिह्वानिर्लेखनेन च ।
तथाऽस्य मलवैरस्यजिह्वागन्धाऽऽस्यदन्तजः ॥
रुचिवैशद्यलघुता न भवन्ति भवन्ति च ॥'
(अष्टाङ्गसंग्रहः, सूत्रस्थानम्-३)

—'अभ्यङ्गमाचरेन्नित्यं स जराश्रमवातहा ।
दृष्टिप्रसदापुष्ट्यायुः स्वप्नसुत्वक्त्वदार्ढ्यकृत् ॥
(अष्टाङ्गहृदयम्, सूत्रस्थानम्-२)'

—शरीरायासजननं कर्म व्यायाम उच्यते ।
लाघवं कर्मसामर्थ्यं दीप्तोऽग्निर्मेदसः क्षयः ॥
विभक्तघनगात्रत्वं व्यायामादुपजायते ॥ (अ.सं.सू.३)

इत्यादयः विहाराः शरीरारोग्याय प्रोक्ताः भवन्ति । स्वास्थ्यं साधयितुं सहस्राधिकानि रूप्यकाणि दत्वा व्यायामशालादिकम् स्थानान्याश्रयामः । दन्तरक्षणार्थं सहस्रशः कचिल्लक्षशः रूप्यकाण्यपि दत्त्वा दन्तचिकित्सालयेषु चिकित्सां कुर्मः । तत्स्थाने, प्रतिदिनमपि आयुर्वेदोक्तोपदेशानुसारं चर्यां कुर्मः एतादृशानां धन-शक्तिव्ययकार्याणामावश्यकतैव नास्ति । यद्धनं सुखार्थं सम्पादयामः तदेव धनं केवलं शरीरनाशकरणं भवतीति नैवोचितम् । प्रत्यहमेतासां चर्याणामनुसरणे समयः नास्ति इति वादः अस्थाने । पश्चाद्रोगमवाप्य चिकित्सालयं गन्तुं

कार्यस्थानाद्विरामप्रस्यपेक्षया एषः मार्गः सुकर एव ।

व्यवहारविषयेऽपि यदायुर्वेदोक्तं भवति तदनुशीलेनेन मनः शान्तं भवति । एतावतैव नास्ति - अद्यतनजीवने बहूनामपि कार्याणां सिद्धये मार्गाः अपि आयुर्वेदाचार्यैः दर्शिताः सन्ति । यथा—कथं वादः करणीयः इत्यादि । तदाहि—

—'तत्रेदं वादमर्यादालक्षणं भवति - इदं वाच्यम्, इदमवाच्यम्, एवं पराजितो भवतीति ।' (चरकसंहिता, विमानस्थानम्, अष्टमोऽध्यायः, षोडशः श्लोकः)

—तत्र वादो नाम स यत्परेण सह शास्त्रपूर्वपक्षं विगृह्य कथयति, स च द्विविधः संग्रहेण जल्पः, वितण्डा च । तत्र पक्षाश्रितयोर्वचनं जल्पः, जल्पविपर्यया वितण्डा (च.वि. ८/२८)

—अस्मिन्नध्याये स्थापना नाम तस्य एव प्रतिज्ञाया हेतुदृष्टान्तोपनयनिगमनैः स्थापना इति लक्षणज्ञेया स्थापना, प्रतिष्ठापना नाम या तस्या एव परप्रतिज्ञाया विपरीतार्थस्थापना इति लक्षणज्ञेया प्रतिष्ठापना इत्यादयः चतुश्चत्वारिंशद्वादमार्गाः प्रदर्शिताः ।

एतत्सर्वं सुस्थितजीवने सुखस्य स्थैर्यार्थमुक्तम् भवति । यदा रोगः मनुष्यं पीडयति, तदा तन्निवारणार्थं विभिन्नप्रकाराः चिकित्साः उक्ताः, भवन्ति । तत्र काश्चन चिकित्साः अन्नेनैव कर्तुं शक्यन्ते, कचिद्विहारपरिवर्तनेन

नाशयितुं शक्यते। बृहद्व्याधिषु कर्तुं पृथक् कर्माणि भवन्ति, यानि वैद्येनैव करणीयानि । तदर्थम् अद्य आयुर्वेदचिकित्सालयाः अपि बहुत्र भवन्ति।

'सर्जेरी' इति यद्वदामः तस्य आयुर्वेद 'शल्यतन्त्रम्' इति नाम भवति। अस्य विषये अत्यधिकं सुश्रुतः इति आचार्येणोक्तमस्ति। आधुनिकवैद्यैः सः 'फादर् आफ् सर्जेरी' (शल्यतन्त्रस्य पिता) इति ज्ञायते। अन्यपदार्थानां शरीरस्य अन्तर्भागेषु प्रयोगः, नेत्रे चिकित्साः विशिष्य केटरेक्ट् इति ज्ञायमानाः, आधुनिकैः प्लास्टिक् सर्जेरी इत्येतादृशाः बहवः विषयाः तेनैव रचिताः सन्ति। तस्मादेव आधुनिकाः वैद्याः वैज्ञानिकाः च विषयान् गृहीतवन्तः। क्वचिदस्य सत्यस्योपरि प्रकाशः भवति, क्वचिन्नास्ति। च अद्यतनवैज्ञानिकाः येषां प्रश्नानामन्वेषणं तेषां सर्वेषां प्रश्नानाम् उत्तराणि अस्माकं पूर्वजाः उक्तवन्तः। तेषां सम्पूर्णतया प्रयोगं जनानां, संस्कृतज्ञानाम्, आयुर्वेदवैद्यानां च साहाय्येनैव साध्यः भवति।

आयुर्वेदस्य पञ्चकर्म इति विषयः अस्माकं शरीरस्य अन्तरङ्गाणां शुद्ध्यर्थं भवति। तेषां प्रयोगः रोगानुसारं वा कालानुसारमर्थात् ऋत्वनुसारं वा कर्तुं शक्यते। एतैः दैहिकाः, मानसिकाश्च लाभाः असंख्येयाः सन्ति । अद्य आयुर्वेदचिकित्सालयेषु पृथक् चिकित्साः बालेभ्यः, वृद्धेभ्यः, पुरुषेभ्यः, स्त्रीभ्यः, नेत्राभ्यां, कर्णाभ्यामित्यादिप्रकारेण क्रियन्ते। यत्र आधुनिकविज्ञानमसमर्थमस्ति, तत्रापि

पूर्वजनानामनुग्रहेण आयुर्वेदः सिद्धिं प्रापयति । किन्तु ईश्वरेण रचितानां केषाञ्चिद्रोगाणां तु केनापि चिकित्सामार्गेण सम्पूर्णतया नाशः नैव साध्यः भवति । तत्रापि जीवनस्य सुखाय बलवर्धनाय च आयुर्वेदः साहाय्यं करोत्येव । आयुर्वेदः सुखजीवने विश्वासं करोति, न तु यन्त्रसहिते वेदनासहिते च जीवने । आयुर्वेदोपदेशानां यथोक्तपरिपालनेन सर्वदा अस्माकं हितमेव भवति ।

आरोग्यदशायाम् आयुर्वेदोक्तचर्यापालनेन, रोगावस्थायाम् आयुर्वेदचिकित्सया च अस्माकं जीवनं सुखमयं भवति । एतावदेव इति न - यल्लक्ष्यं साधयितुं सदा यतामहे तल्लक्ष्यं प्रति सस्वस्थशरीरं, सस्वस्थचित्तं च क्लिष्टं विना गन्तुं शक्नुमः । अतः अस्माकम् आचार्यैः दर्शितं मार्गमनुसरामः । जीवने आयुर्वेदविषयान् योजयाम । ईप्सितं लक्ष्यमपि साधयाम, सुखं जीवाम ॥

कल्हारश्रीमञ्जरीपुञ्जरीतिं धिक्कुर्वन्तीमम्ब ! पाटलिम्ना ।
मूर्तिं ध्यात्वा शाश्वतीं भूतिमायन् इन्द्रो राजा जगतो य ईशे ॥

தாமரையழகு முழுவதையும் தனது செவ்வழகால் தூசாக்கி விளங்கும் நுமது வடிவமைப்பை ஹே தாயே ! எவனொருவன் த்யானம் செய்து அழிவற்றச் செல்வத்தைக் கைவசப்படுத்திநிற்கிருனே அவனல்லவோ உலகமனைத்தையும் ஆளப்பிறந்த இந்த்ரனுவான் !

—ஸ்ரீ ஆதிசங்கரர் - த்ரிபுர சுந்தரீ வேத பாதஸ்தவம் 24.

Date of Publication : 10th of every month
REGISTERED Registration No. TN / CC (S) DN / 443 / 15 - 17
TN / PMG (CCR) / WPP 696 / 15 - 17
Registration with Registrar News Paper of India 30478 / 77
SAMSKRITASRI



Printed by : Zigma Graphics, 9/1, Thirtharappan Street, Triplicane-5
Edited and Published by Sri S. Srinivasa Sarma on behalf of the Samskrit Education Society (Regd.)
Old 212/13-1, New No.11, St. Mary's Road, R.A. Puram, Chennai - 600 028.